# निर्याति नैव स्मृतिः

(प्रबन्ध-काव्यम्)

डॉ० ओम्प्रकाश पाण्डेयः




अखिल–भारतीय–संस्कृत–परिषद्
महात्मा गाँधी मार्ग, हज़रतगंज
लखनऊ—२२६००१

# समर्पणम्

स्वविकलप्रेम्णो नायिकायाः स्मृतौ कृतिरियं समर्प्यते,
स्वनाम-ग्रहणमपि यस्यै न रोचतेऽत्र ।

# प्रकाशकीयम्

अखिलभारतीयसंस्कृतपरिषदः सन्ति कानिचिद् विशिष्टानि मौलिकानि चोद्देश्यानि। तेषु कारयित्र्याः प्रतिभायाः प्रोत्साहनमस्त्येकं महनीयमुद्देश्यम्, यतो हि प्रतिभयाऽनयैव काचिद् भाषा नवयौवनसम्पन्ना सर्वाङ्गसुन्दरी च भवितुमर्हति। अत एवेदमेवोद्देश्यं पुरो निधाय संस्कृतभाषोपनिबद्धानि काव्यनाटकादीनि परिषदा प्रकाशितानि सहृदयैः प्रशंसितानि च बहूनि विलसन्ति। प्रस्तुतकाव्यप्रकाशनमप्यस्त्येतस्यामेव परम्परायां कश्चन विशिष्ट उपक्रमः। प्रायः संस्कृतभाषोपनिबद्धानि कारयित्र्या प्रतिभया मण्डितानि बहूनि काव्यानि वत्सरमनुवत्सरं यत्र तत्र प्रकाश्यन्ते, किन्त्वाधुनिकसमये प्रकाशितान्यप्येतानि काव्यानि सर्वथाऽऽधुनिकतातत्त्वविरहितानि भवन्ति प्रायशः। डॉ० ओम्प्रकाश-पाण्डेयविरचितं 'निर्याति नैव स्मृतिः' इति काव्यमनया दृष्ट्याऽनुशीलनीयं सहृदयैः। एतत्काव्यं सहृदयसामाजिकानां पुरस्तात् प्रस्तुवद्भिरस्माभिर् महान् खल्वनुभूयते हर्षोत्कर्षः। लखनऊविश्वविद्यालयस्य संस्कृतविभागे सुदीर्घकालादुपाचार्यपदमलङ्कुर्वाणो बहुभिः साहित्यपुरस्कारैस्सम्मानितो डॉ० ओम्प्रकाशपाण्डेयोऽयं वेदविद्याविद्योतितान्तःकरणोऽपि 'वेदाभ्यासजडः' इति कालिदासोक्तिं निरस्य सरसं काव्यं निर्मातीति सुविदितमेवास्ति सुरभारतीरसिकानाम्। तेन विरचिता बह्व्यो हृद्याः कविताः पत्रपत्रिकासु प्रकाशिताः समास्वादिताश्च सहृदयैः। साम्प्रतं कविरयं फ्रांसदेशस्य पेरिसनगरे सारबोन नूविली-विश्वविद्यालयेऽतिथ्याचार्यपदं समुद्वहति।

आशास्यते यद् डॉ० ओम्प्रकाश-पाण्डेयविरचितं काव्यमिदं काव्यरसिकानां मनांसि रञ्जयिष्यत्यवश्यम्।

**अशोककुमार कालिया**

**मन्त्री**

**अखिलभारतीय संस्कृत-परिषद्, लखनऊ**

# अनुक्रमः

# प्रास्ताविकं किमपि

'निर्याति नैव स्मृतिर्' इत्याख्यमेतत् प्रबन्धकाव्यं सहृदयानां पुरतः प्रस्तुवतो मे मनो भृशं सम्मोदते, यतोहि 'सर्वं याति न याति किन्तु मनसः स्निग्धा च सा संस्मृतिः।' प्रापञ्चिकेऽस्मिञ्जगति कालक्रमेण किञ्-किन्न परकीयं भवति !! केवलं स्मृतय एव स्वीयास्तिष्ठन्ति। स्मृतीनामस्मिन् निचयेऽपि काश्चन स्मृतयो विशिष्टा भवन्ति, यासां माधुर्येण सौरभ्येण चैव जीवन-क्रमोऽयं प्रचलति। वयसः संसरणादिमाः स्मृतयोऽपि क्रमशः प्रियतराः प्रियतमाश्च जायन्ते।

स्मृतीनामस्मिन् समुच्चये वर्तत उद्ध्वस्तमस्माकं ग्रामजीवनम्। स्वातन्त्र्योत्तरकाले भूयो भूयो ग्राम-विकासाय प्रतिश्रृण्वद्भिरपि राजनीति-निपुणैर्नेतृनिकरैर्ग्रामाणां कीदृशी दुरवस्था कृतेति विदन्त्येव सर्वे। अस्या दुरवस्थाया यत्किञ्चिदुट्टङ्कितं वर्ततेऽस्मिन् काव्ये। नगरजीवनमपि सन्त्रस्तमेव विद्यते यत्र वातानुकूलभवनैर्हि नरो निगीर्णः।

संक्षिप्ताऽप्यनन्तेयं कथा। नैषा केवलं मामकीनैवास्ति, अपितु वस्तुतस्त्वेषा त्वदीया, मदीयाऽऽस्माकीना चेति सर्वेषां सर्वासां वा। येषामियं व्यथा-कथाऽस्ति, तेषां करकुशेशयेषु समर्पणमस्या विधाय मम मानसी स्थितिस्तादृश्येवास्ति, यादृशी शकुन्तलायाः पतिगृहगमनानन्तरम्महर्षे. कण्वस्यासीत्—

"जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा॥"

छन्दोविधानविषयेऽप्यत्र किञ्चिन् मया वक्तव्यम्। सामान्यतः संयुक्ताक्षरो ह्रस्ववर्णो दीर्घत्वमाप्नोति, यथोक्तं हि वृत्तरत्नाकरे—

'सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः ।
वा पदान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिकोत्युजुः ॥' (१.२)

प्रायेण मयेयं व्यवस्था समादृता, किन्तु क्वचित्-क्वचिदपि मयाऽस्या अपवादोऽप्यङ्गीकृतः । तत्रैवोक्तम्—

'पदादाविह वर्णस्य संयोगः क्रमसंज्ञकः ।
पुरःस्थितेन तेन स्याल्लघुतापि क्वचिद गुरोः ॥' (१.१०)

टीकाकर्ता सुल्हणेन क्रमस्यास्येदृशी व्याख्या कृतास्ति स्व-सुकविहृदयानन्दिन्यां टीकायाम्—

'पूर्वाचार्याणां पिङ्गलनागप्रभृतीनां कालिदासादीनां च कवीनां समयपरिगृहीतः संयोगः ।'

तात्पर्य-टीकायामस्याभिप्रायः 'प्रादीनां परसम्बद्धत्वव्यावृत्तिः'— इत्युक्तः । तत्र कानिचिदुदाहरणान्यपि दत्तानि सन्ति; यथाहि 'अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति;'—'प्रयाति तरुणीं प्रति प्रतिकलं मनः कामिनीम्—' इत्यनयोः 'रि'—'ति' इति च वर्णद्वयी संयुक्तपरापि दीर्घतां नाप्नोति ।

अस्य काव्यस्य प्रकाशनाय उत्तरप्रदेशसंस्कृतसंस्थानेन यदार्थिकसाहाय्यं प्रदत्तन्तदर्थं संस्थानं साधुवादमर्हति । अखिलभारतीयया संस्कृतपरिषदाऽस्य प्रकाशन-दायित्वमङ्गीकृतन्तदर्थं परिषदोऽधिकारिणोऽपि, विशेषतो गुरुवर्याः प्रो० जगदम्बाप्रसादसिनहा महाभागाः प्रो० अशोककुमारकालिया-महोदयाश्च धन्यवादानर्हन्ति । तान् प्रति कार्तज्ञ्यं निवेद्यते मया । अनुजकल्पो डॉ० बृजेशकुमारशुक्लोऽप्यवसरेऽस्मिन् आशीर्वचोऽभिः पुरस्करणीयः । इत्यलम्—

**ओम्प्रकाशपाण्डेयः**

२३, मिलनी पार्क,
विश्वविद्यालय-परिसर,
बादशाहबाग, लखनऊ ।
१२ अगस्त १९९८ ।

डॉ० ओम् प्रकाश पाण्डेय
पेरिस (फ्रांस)

# निर्याति नैव स्मृतिः

## (प्रबन्धकाव्यम्)

(१)

कश्चिद्ग्रामगतो गृहस्थकृषकः शान्त्यावसत् स्वे गृहे
पुत्रास्तस्य वशंवदाश्च गृहिणी सद्धर्मशीला सती ।
आस्तां द्वारि सहायकावपि कृषौ स्वस्थौ बलीवर्दकौ,
आसीद् दुग्धवहा च गौस्तु कपिला द्वारस्थिता मङ्गला ॥

(२)

अर्थाभावनिपीडितोऽपि कृषकः शस्याढ्यतामुद्वहन्
सङ्गच्छद्भिरथापि तुष्टमुदितैः प्रीतिप्रसक्तैर्जनैः ।
सर्वैः स्वैश्च कुटुम्बिभिः सह चिरं धर्मव्रते संस्थितः,
कालं निर्वहति स्म साधु मनसा प्रीतः प्रसन्नश्च सः ॥

(३)

पूर्वोक्तस्य कृषीवलस्य तनयो ज्येष्ठश्च श्रेष्ठोऽभवत्
विद्याबुद्धिसमन्वितश्च निपुणोऽसौ विश्वविद्यालये ।
व्यापारस्य नियोजनाय विहितं पाठ्यन्तदाऽधीत्य च,
ग्रीष्मस्यावसरे गृहं स मुदितो ग्रामस्थमभ्याययौ ॥

(४)

तत्रैका प्रतिवेशिनी गुणवती कन्याऽवसत् सुन्दरी
तन्वङ्गी तरुणी विमुग्धनयना सारल्यमूर्त्तिः परा ।
कार्यार्थञ्च गतागतं विदधती मध्येगवाक्षं स्थिता
दृष्टौ तस्य मुहुर्मुहुर्निपतिता ध्यानं चकर्षाऽस्य सा ॥

(५)

उक्तम्मानसतत्त्वविद्भिरसकृद्, बध्नाति यूनोर्दृढं
कैश्चित्प्रेमरसैर्गुणैर्हि मनसी दृष्टिस्तदाद्या तयोः ।
शीघ्रं तत्र तयोः प्रसक्तनयनैरन्योन्यसन्दर्शनम्
भूयो मुग्धविलोकनञ्च हसितं स्वल्पञ्च सङ्केतितम् ॥

(६)

ईषत्संलपनं ततश्च सहितं किञ्चित् सुसम्मेलनम्
पश्चादिङ्गितमाध्यमैः विजनस्थानस्थमायोजनम् ।
मन्तव्यम्मनसोस्ततश्च बहुधा गूढाक्षरोद्घाटनम्
पश्चाद् भावप्रकाशनञ्च युगपत् किञ्चित् प्रतिज्ञापनम् ॥

(७)

यावज्जीवमनन्तरन्तदनयोः सत्साहचर्याय वै
कस्मिंश्चित् रहसि स्थिते च शपथग्रहणं हि देवालये ।
स्वच्छन्दभ्रमणं वने च सरितस्तीरे विहारो मुहुः ।
प्रोक्तः प्रेमकथाप्रसङ्गरसिकैरित्थञ्च प्रेम्णः क्रमः ॥

(८)

सानन्दं निरणीनयत् स तरुणः प्रेम्णा च मासद्वयम्
साकं संविहरन् तया स तरुणः ग्रामस्थया कन्यया ।
कार्याभाववशात् ततश्च नितरां खिन्नः समाश्वास्यताम्
लब्धुं कामपि जीविकामभिययौ ग्रामाच्च मुम्बापुरीम् ॥

(९)

ग्रामाद् याति युवा न वृत्तिरहितो, यात्येव तद्यौवनम्,
आशा याति, दिशः प्रयान्ति तमसाऽऽच्छन्नं भो नदृश्यते।
विद्या याति, बलं प्रयाति सकलं ग्रामाद् भविष्यन्तथा
ग्रामे किञ्च सखे! विषण्णहृदयं वार्धक्यमेव स्थितम्॥

(१०)

ग्रामादन्नचयः पयश्च सकलं दुग्धं फलञ्चोह्यते,
वृत्तिं कामनवाप्य तत्र युवभिः स्वैरं ततो गम्यते।
केचिद् राजनयप्रपञ्चचतुरास्तत् साम्मनस्यम्महत्
छिन्दन्तोऽनुवसन्ति सर्पसदृशाः नूनं वने चान्दने॥

(११)

एषा सैव वसुन्धरा सुरुचिरा ग्रामस्य शस्योर्वरा
सर्वेषामुदरम्भरा भगवती विश्वम्भरा ह्यन्नदा।
सर्वस्वाय च कल्पते कृषिरियं किन्त्वद्य वन्ध्यायते
औदासीन्यवशात् कृषीबलसुताः सत्यं क्षुधा-पीडिताः॥

(१२)

यातं तात! शनैः शनैस्तु सकलं तत्सौमनस्यन्ततः,
दैन्यं, दुःखमसह्यमेव, कलहो, वैरञ्च तत्रागतम्।
भ्रष्टैः स्वार्थपरायणैः कतिपयैः दुर्नीतिसञ्चालकैः
उप्तास्तत्र विभाजनाय तरवो वैषम्यमूलास्तदा॥

(१३)

भेदास्तत्र विकल्पिता हि विविधाः जातिं समाश्रित्य तैः,
उक्ताः केऽपि द्विजाश्च भान्ति दलिताः केचित् सवर्णास्तथा।
भिन्नो हिन्दुरिहास्ति कोऽपि यवनो बौद्धो विभिन्नस्तथा
इत्थम्भेदधियाऽनयेन बहुधा रेखाश्च तैरङ्किताः॥

(१४)

शान्तिस्तत्र सहिष्णुता, सुजनता, सद्भावमूलं सुखम्
बन्धुत्वं, सहकारिता च विनयः, प्रज्ञा, विवेकस्तथा।
स्वातन्त्र्योत्तरमत्र नेतृनिकरैः प्रज्वालिताग्नौ सखे !
एकैका अपि राजनीतियजने भस्मावशेषङ्गताः ॥

(१५)

ग्रामँल्लुण्ठति नायकोऽत्र निखिलं स्वैरञ्च निर्वाचने
ग्रामँल्लुण्ठति लेखपालनिकरो लुण्ठन्त्यमुं रक्षिणः।
ग्रामादद्य पलायिताश्च तरुणा ये विद्ययाऽलङ्कृताः
ग्रामाः स्वर्गसमाः पुरा नु नरकायन्ते च ते साम्प्रतम् ॥

(१६)

निर्गच्छन्निजगेहतः स तरुणः पश्यन्मुहुः स्वप्रियाम्
सङ्केतैरवदत्—'प्रियेऽहमधुना यामि प्रसह्यैव ते
सान्निध्याद् विवशोऽपि वृत्तिरहितः शीघ्रं पुनस्तेऽन्तिकम्
ह्यायास्यामि'—निशम्य सापि तरुणी तूष्णीमपश्यद्धि तम् ॥

(१७)

स्नेहैर्दुर्ललितैश्च तत्र पितरौ, भ्राता, भगिन्यस्तथा,
दायादा, इतरे च ग्राम्ययुवकाः वृद्धास्तथान्ये जनाः।
माङ्गल्यं विदधद्भिरेव नयनैर्वाष्पाकुलैस्तत्क्षणे
पश्यन्तस्तरुणं चिरं सुविषमे मार्गे च तूष्णीं स्थिताः ॥

(१८)

मायायाः नगरी च विस्मयकरी ह्यानन्दपूर्णेश्वरी,
उद्योगैश्च महार्घरत्ननिचयैः रत्नाकराङ्कस्थिता।
उच्चैरुच्चतरैश्च भव्यभवनैर्यक्षाधिपस्थापितां
निन्दन्तीव सुशोभते तदलकां मुम्बापुरी साम्प्रतम् ॥

(१९)

सम्मोहाय वसन्ति यत्र वनिताः सौन्दर्यसाराः श्रियः,
शैलूषीश्च विलोक्य राजतपटे मन्येऽहमत्र स्थितः ।
फिल्मोद्योग–सभाजनाय बलवत् सम्भूय सद्यश्च ता
रम्भाद्याश्च दिवं विहाय परितस्तिष्ठन्ति भूमण्डले ॥

(२०)

एषा सैव महापुरी मधुमयी यत्राभवन्नायिका
हेमा - नूतन - वैजयन्ति-नरगिस - श्रीदेविमुख्यास्त्रयः ।
यासां वक्त्रविलोकनाय रसिकाः सर्वस्वदानोद्यता
अत्रत्यैर्विनिवेदिता अतिथयः सोत्साहमित्थं पुनः ॥

(२१)

अत्रत्यैव च माधुरी रसधुरी, यस्याश्च सञ्चालनम्
मन्ये लोचनयोर्निरीक्ष्य बहुधा विस्मापितोऽहं भृशम् ।
अस्या राजरसायनेन घटितं नेत्रद्वयं वर्तते
किं वा तत्र तडित्प्रभेव गगनादागत्य सन्तिष्ठति ॥

(२२)

अस्यामेव कुबेरकोशविभवैस्तुल्या समृद्धिः सदा,
यक्षेशा निवसन्ति ते नवनवा एतादृशाः श्रीफलाः ।
यावज्जीवनमर्जितं सुविभवं घोरश्रमेणापि मे
येषामेकदिनव्ययार्थमपि तन्नेदं क्वचित् कल्पते ॥

(२३)

माधुर्यास्तु विलोक्य चित्रफलके भावप्रपञ्चं सुधीः
कश्चिच्चित्रकलाप्रवीणपुरुषो वृद्धोऽपि मुग्धोऽभवत् ।
दृष्ट्वाऽसौ च तयाभिनीतमसकृक्चित्रं चरित्रन्तथा
तस्या नाम-जयक्रमे च नितराँल्लग्नोऽत्यजज्जीवनम् ॥

(२४)

अत्रत्यास्तु नराः प्रयाणसमये वाञ्छन्ति कादम्बरीं
मुद्रालाभमनुस्मरन्निह जनः प्राणोतिसिसृक्षुः सदा।
कान्तानत्र विहाय भद्रवनिताः स्निह्यन्ति कांश्चित् शुनः
आश्चर्यैश्च समन्वितेयमधुना नूनं हि मुम्बापुरी ॥

(२५)

तैलं वाऽस्तु च दन्तचूर्णमथवा विक्रेयद्रव्यं क्वचित्
नग्नामत्र तनुं स्त्रियश्च विपणौ विज्ञापयन्ते जनाः।
नारी नात्र मता स्नुषा हि भगिनी, माताऽथवा पुत्रिका
मूल्यम्माति जनोऽत्र फिल्मविपणौ देहश्रिया केवलम् ॥

(२६)

ऐश्वर्यञ्च परं तथैव नगरे नैर्धन्यमास्ते परं
निद्रां नैव समाप्नुवन्ति धनिनः पर्यङ्कशय्यास्वपि।
केचित्तेऽपि वसन्ति भाग्यरहिता मुम्वे ! तवाङ्के सदा
रात्रौ राजपथस्तु केवलमहो ! येषाञ्च शय्यायते ॥

(२७)

राजन्तेऽत्र मनोरमाश्च बहवः प्रासादतुल्या गृहा
येषां वास्तु-समुच्छ्रस्य रचना-चातुर्यमुद्घुष्यते।
अन्याः सन्ति कपोतनीडसदृशाः कक्षैकमर्यादिताः
सर्वे यत्र कुटुम्बिनः सहचरैस्सार्धं श्रयन्ते गृहे ॥

(२८)

लब्धन्तेन पदं प्रवन्धसमितौ कस्मिंश्च यन्त्रालये,
उच्चैर्मासिकवेतनञ्च भवनं यानञ्च निर्धारितम्।
यत्नाद् योग्यतयापि श्रेष्ठिकृपया वर्धिष्णवे स्वप्रिया
शीघ्रं श्रेष्ठिवरेण तत्र दुहिता तस्मै समुद्वाहिता

(२९)

भार्या तस्य जगत्प्रपञ्चनिपुणा जाता च मुम्बापुरे,
नागर्या च तयाऽचिरान्निगडितो मुग्धः पतिर्निश्चलः ।
धूर्तस्तच्छ्वशुरोऽपि मोह-ममतापाशं तनोति स्म तद्
यस्मिन्नेष युवाऽनुभूतिरहितः सद्यो निबद्धोऽभवत् ।।

(३०)

सन्देशा अपवारिताः प्रियजनैः सम्प्रेषिता ग्रामतो,
वार्तायाञ्च तिरोहिता हि सकला ग्रामप्रसङ्गास्तया ।
मुम्बय्याश्च सरागरङ्गमधुरे काले समुद्वाहिते
पूर्वार्द्धं निखिलं हि तेन वयसः स्वप्नप्रसङ्गायितम् ।।

(३१)

ग्रामस्योपवनानि, मुक्तपवनम्, भूमिं सगन्धाञ्च ताम्,
ग्रामस्थां हि निजप्रियाञ्च सकलस्नेहप्रसङ्गञ्च तम्,
मुम्बय्यास्तु सुचाकचिक्यबहुले व्यस्ते च दैनन्दिने
जीवन्नेव स जीवनेन निखिलं सस्मार बाल्यं वयः ।।

(३२)

स्नेहे यज्जननी प्रसूतिसमये कष्टम्, ततः पालने,
शिक्षायै जनकोऽसहिष्ट कठिनं दुःखं दरिद्रस्थितौ ।
रक्षासूत्रनिबन्धनप्रकटितं स्नेहं भगिन्याश्च तत्
श्रद्धामानयुतं सहोदरसुखम्, सर्वं विसस्मार सः ।।

(३३)

ग्रामस्थानि रजांसि, यत्र निहितो रागानुबन्धो भृशं
कौमारञ्च वयः किशोरसुहृदः क्रीडासखायश्च ते ।
आदर्शाश्च, समादरार्हगुरवो विद्यालयन्तत्तथा,
सम्भ्रान्तेन तु तेन तत्र विभवे सद्यः सुविस्मारिताः ।।

(३४)

एतैरसंख्यविवरैश्च समुन्नतैस्तु
भव्यैर्हि लौहघटितैश्च तलातलैर्नु ।
पाषाणखण्डरचितैरपि वज्रलिप्तै-
र्वातानुकूलभवनैश्च नरो निगीर्णः ॥

(३५)

एतानि तात ! नगराणि महान्ति, भ्रान्तिः;
'कंक्रीट'-द्रव्यरचितानि वनानि सन्ति ।
यन्त्रात्मको वसति कोऽपि महाँश्च दैत्यो
नित्यं यदत्ति मनुजं हि मनुष्यताञ्च ॥

(३६)

आत्मीयता, सुजनता च सहिष्णुता वा
नास्त्येव किञ्च सहभाव इहापि कश्चित् ।
सम्बन्धमत्र तनुतः किल लाभ-हानी
स्वार्थप्रबन्धघटितैव समस्तप्रीतिः ॥

(३७)

प्रीतिच्छलेन नगरेषु हि कामतुष्टिः
धर्मच्छलेन निहिता निजदेहपुष्टिः ।
स्नेहाय नैव विमलाय समर्पणाय
जीवत्यसौ स्वमुदरम्भणाय मात्रम् ॥

(३८)

प्रातः प्रदोषसमये च विभिन्नयानै-
र्नित्यं गतागतममी हि समाचरन्तः ।
जानन्ति ते न सुषमामिह शारदीया-
मासन्नगन्धमपि तत् कुसुमाकरस्य ॥

(३९)

कार्यालयस्य समयैस्तु सुचालितास्ते
वेत्तुं कथञ्चिदपि नैव सुशक्नुवन्ति ।
सूर्योदयः किमुत व्योम्नि महामहस्वी
किंस्विच्च कर्हिचित् सान्ध्यरविः प्रयातः ॥

(४०)

कोलाहलं पथिषु 'घर्घर' नादतीव्रं
शृण्वञ्जनो भवति तत्र मुमूर्षुरेव ।
प्राणोद्गतं किमपि तन्मधुगीतमेकं
श्रोतुञ्च तस्य हृदि नावसरो न कालः ॥

(४१)

यन्त्रप्रयोगबहुले च विचित्रकाले
यन्त्रायतेऽत्र विकलेन्द्रियमानवोऽपि ।
यन्त्रैर्हि यन्त्रयत्येष निजं गुरुत्वं
प्रेम्णोऽभिव्यक्तिरपि तस्य च यन्त्रितैव ॥

(४२)

धर्मोऽत्र शङ्खकरतालमृदङ्गवाद्यै-
रत्युच्चशृङ्गशिखरैरपि मन्दिरस्थः ।
'चर्च' स्थितो भवतु वापि च 'मस्जिद' स्थो
धर्मो न तात ! हृदयैकगृहेऽवशिष्टः ॥

(४३)

अर्थस्तु वित्तविनियोगमुखैरसंख्यै-
र्वाणिज्यनिष्ठनिधिसङ्ग्रहणैर्विशिष्टः ।
अर्था न सन्ति खलु भद्रगृहेषु तेषु
दारिद्र्यनृत्यनियतिर्नियतैव येषु ॥

(४४)

कामोऽपि वारवनितासु च नृत्यगीते-
ष्वेवास्ति मित्र ! न च तद्धि गृहं प्रयाति ।
दैन्याच्च यत्र तरुणी न विवाहलग्नं
प्राप्नोति रूपगुणशीलसमन्वितापि ॥

(४५)

इत्थं सखे ! सुपुरुषार्थचतुष्टयानां
बाह्यस्वरूपमिह तिष्ठति गर्वदीप्तम् ।
सर्वं सुखं वरीवर्ति महापुरेऽस्मिन्
नास्त्येव तत्र किल मोक्षविचार-हेतुः ॥

(४६)

इत्थन्तेन कथञ्चनापि बहवः संवत्सरा यापिताः,
मुम्बय्यां वसता सुवर्णघटिते जोषञ्च तत्पिञ्जरे ।
तस्यादर्शि सितासिताः श्रवणयोः पार्श्वे कचानाञ्चयः
देहस्थौल्यमथापि बुद्धिविभवः, ख्यातिः, समृद्धिस्तथा ।

(४७)

अज्ञातेन हि हेतुना किमपि तज्जातञ्च तज्जीवने,
पर्यौत्सुक्यमसंस्तुञ्च हृदये किञ्चिन्नवोत्थन्ततः ।
प्राचुर्येऽपि सुखस्य तस्य मनसः शान्तिः सुदूरङ्गता,
ऐश्वर्येऽपि निरीश्वरः स सततं स्वस्यापि जातोऽधुना ।

(४८)

आहारः शयनादिकञ्च रुरुचे तस्मै न तस्मिन् क्षणे
वैकल्ये मनसः प्रसादनधियाऽम्भोधेस्तटेऽयं ययौ ।
उत्तिष्ठद्भिरथापि तुङ्गसलिलैरुच्चैस्तरङ्गैर्मुहुः
सिन्धुर्यत्र च मातृभूमिचरणौ प्रक्षालयन् संस्थितः ॥

(४९)

अङ्गस्पर्शैर्हसितवदनैरीषदीषत् सलज्जैः
प्रेमालापैस्तदनुगमनैरिष्टलोकैश्च सार्धम् ।
हस्ते हस्तं नयनयुगलं नेत्रयोः सन्दधानाः
सन्तिष्ठन्तः सिकतिलतटे तेन दृष्टा युवानः ।।

(५०)

मुम्बय्यास्तज्जलधिसलिलस्पृष्टतीरे सुरम्ये
सङ्गच्छन्तो युवतियुवकाः स्निग्धदृष्ट्याऽऽलपन्तः ।
कुर्वन्तस्ते भवनरचनां बालुकाभिर्यथेच्छम्
सङ्कल्पन्ते परिणयविधिं निर्विशङ्कं चरन्तः ।।

(५१)

तत्रासीना गलितवपुषो जीवने सावकाशाः
प्रौढाः सार्धं तनय-तनयैः क्रीडया मोदमानाः ।
सानन्दन्ताः सुरतिसुखदाः शर्वरीः संस्मरन्तः
संलग्नास्ते पुरुषवनिता यौवनोज्जीवनाय ।।

(५२)

आबद्धास्स्वे नवपरिणये केलिलीलां चरन्तो
मुक्ताः स्वैरं तरुणि-तरुणास्तत्र केचिद् रमन्ते ।
दृष्ट्वा वृद्धाः प्रियसहचराँस्तानसंख्याँश्च यूनस्
तारुण्यं स्वं विगतविभवं सस्पृहाः संस्मरन्ति ।।

(५३)

दृष्ट्वा प्रौढाः समदमदनस्याधिपत्यञ्च यूना-
-मेकच्छत्रं परमसुखदं जीवने सन्निविष्टम् ।
रोषावेशैर्युवतियुवकान् वर्जयन्तः सनाट्यम्
ह्यन्तर्निष्ठं रसमनुभवन्त्यत्र ते तत्परोक्षम् ।।

(५४)

अन्तस्तापाद् धवलकिरणान् रक्तरूपान् दधानो
ह्यस्तं यातो दिनपतिरितः सागरे मन्द-मन्दम् ।
पश्यन्नेतद् रतिपतिकलावैभवं तत्र खिन्नः
किञ्चित् किञ्चिद् हृदयदहरे नायकोऽसौ निमग्नः ॥

(५५)

रिक्ते तस्मिन् जलधिपुलिने सैकते कापि नारी
शोकाविष्टा धवलवसना चिन्तिता सन्निषण्णा ।
गन्तुं तस्माद्विजनतटतो नोद्यतां तान्निरीक्ष्य
भावाविष्टः कथमपि तदा सोऽन्तिकस्थं प्रपेदे ॥

(५६)

[पुरुषः]

दुःखार्त्ते ! का त्वमसि विजने संस्थिता देवि ! तीरे,
विस्रब्धं मामवगमयितुं शक्ष्यसि स्वां हि पीडाम् ।
श्रुत्वा हेतुञ्च तव मनसो वेदनायाः कथञ्चिच्
छल्योद्धारे किमपि करणायोद्यतस्त्वां प्रवच्मि ॥

(५७)

[नारी]

एकान्तस्थे सुजनरहिते वञ्चकेऽपि प्रदेशे
यद्यप्यस्मिन् विषमसमये नास्ति विश्वासहेतुः ।
भूयो भूयस्तदपि हृदये कोऽपि मामत्र वक्ति
दुःखार्त्तानां भवति सदृशी कापि विश्वासभूमिः ॥

(५८)

विश्वस्ताहं तव च वचनैः किञ्चिदप्येव वक्तुं
संलापैस्ते कथितमधुना त्वं हि मे बाल्य-मित्रम् ।
सन्देशः कोऽपि तव नगरान्नैव लब्धः कदाचिद्
बन्धो ! सर्वो नियतिनियतो विप्रलम्भश्च योगः ॥

(५९)

अद्यापि साक्षित्वमुपैति नित्यं
प्रतिश्रुतिः सा तव तात ! सम्यक् ।
आश्वासनैस्तैस्तु प्रतीक्षयैव
मया समुद्वाहित एष कालः ॥

(६०)

अनन्तरं बन्धुजनैर्गृहस्थैर्
विवाहिताऽहञ्च प्रसह्य येन ।
तेनैव कान्तेन समं मयाऽयं
यथाकथञ्चित् समयो व्यतीतः ॥

(६१)

दिवङ्गतः सोऽपि पतिः परश्वो
रुजा चिकित्सालय एव जोषम् ।
अतोऽपि जीवामि विडम्बनाभि–
र्निपीडिता तात ! कथं न जाने ॥

(६२)

मर्यादया लोकदृशा च नूनं
कियन्ति सन्त्यत्र सुबन्धनानि ।
तथापि पृच्छामि हि साहचर्यं
त्वदीयसम्बन्धमपि स्मरन्ती ॥

(६३)

प्रज्वाल्य मज्जीवनवेदिकायां
शुभाशया मङ्गलदीपमाद्यम् ।
ततस्त्वमत्रैव क्वचिद् विलुप्तो
दुनोति तन्नापि च मामिदानीम् ॥

(६४)

तटद्वयं गच्छति तात ! नद्याः
समान्तरेणैव दिशं समानाम् ।
न कर्हिचित् तन्मिलिता कथञ्चिच्-
च कुत्रचित् वापि निकाममेव ॥

(६५)

युग्माः सुखेनाऽत्र सखे ! कियन्तो
विना विवाहं गमयन्ति कालम् ।
एतेऽपि येषामिह भागधेयं
क्षयत्यहो ! साप्तपदीनसख्यम् ॥

(६६)

मिलन्ति, श्लिष्यन्ति, पुनर्मिलन्ति
जना इहैव प्रिय-प्रेयसीभ्यः ।
आप्लावितायां गवि नौरिवास्मत्-
स्थितिश्च संयोगमनुप्रपन्ना ॥

(६७)

एषैव दुःखान्तकथा मदीया
सखे ! न किञ्चिद् वचनीयमग्रे ।
सम्मेलनं मेऽत्र त्वया सहापि
विधेर्हि वैचित्र्यमभिव्यनक्ति ॥

(६८)

त्वं ब्रूहि मे सम्प्रति बाल्यबन्धो !
स्मरस्यहो ! कच्चन नामधेयम् ।
सुखप्रपूर्णे तव जीवनेऽस्मिन्
दुनोति नो संस्मृतिरेव कच्चित् ॥

(६९)

[पुरुषः]

भद्रे ! श्रुतं तदखिलं हि मया त्वयोक्तम्
चिन्तातुरस्तदनुबोद्धुमहं समर्थः ।
त्वामत्र खिन्नहृदयामधुनोपलभ्य
किंस्विन्मुमूर्च्छिषति चित्तमिदं न जाने ।।

(७०)

कालो याति शनैः शनैर्हि दिवसान् मासानतिक्रम्य तद्
वासन्तं सुखमप्यतीत्य जगती नैदाघमासेवते ।
विश्लिष्टाश्च भवन्ति केऽपि सुहृदो दूरङ्गता हेतुभिः
प्रीतिर्नैव च याति किन्तु मनसो भूयोऽपि विस्थापिता ।।

(७१)

प्रावृड् याति, क्षयत्यगाधसलिलं शुष्यत्यजस्रं सरः,
एकैकाशविहंगमास्तु वियति भ्राम्यन्ति मुक्त्वा तटम् ।
आघ्राताऽध्वनि पुण्डरीकसुरभिः श्रान्ताऽध्वनीनेन या
सर्वं याति, न याति किन्तु सुरभेः स्निग्धा च सा संस्मृतिः ।।

(७२)

रूपं याति, वयः प्रयाति, तनुरप्येषा त्वपक्षीयते,
कान्तिर्याति नरस्य कापि मनसो भ्रान्तिश्च निर्गच्छति ।
स्वैरं यान्ति कुटुम्बिनोऽपि बहुधा कालान्तरादद्य मे
सुप्ता कापि तपस्विनी हृदि परा निर्याति नैव स्मृतिः ।।

(७३)

प्रौढोऽहञ्च निपीडितेव जरया जाया गृहे तिष्ठति,
सन्तत्योऽपि वयस्कतामुपगता, भोगा न भुक्ताश्च ये ।
किन्त्वद्यापि तडित्समेव झटिति स्निग्धा नवे यौवने
प्रच्छन्नेन मया कृतस्य प्रथमप्रेम्णः स्मृतिर्द्योतते ।।

(७४)

स्मारं स्मारमथाधुना परिचितस्मित्योल्लसत् ते मुखं
श्रावं श्रावमथापि भावगगनै प्रीति-प्रसक्तं वचः।
सेवाभक्तिमनुस्मरेण विगतः कालोऽयमैकान्तिको
यास्यत्येवमपीह शिष्टसमयः स्मृत्यैव ते केवलम् ॥

(७५)

मध्ये सन्ति कियन्ति योजनशतान्येतानि मागस्य नौ
दुर्गम्याणि च तानि सन्ति बहुधा बाधा असंख्या अपि।
लोकानाञ्च भयं दुरन्त्यमनयं सर्वाण्यतिक्रम्य तत्
सान्निध्यं तव सन्तनोति सततं सैषा त्वदीया स्मृतिः ॥

(७६)

बाल्यं याति यथाक्रमं हि वपुषो, यात्येव तच्चापलम्,
गच्छन्त्येव पुरान्तराणि विमुखाः क्रीडासखायश्च ते।
चौर्यादामवने कथञ्चिदपि यल्लब्धं फलं तस्य मे
मालाकाररुषापशब्दसहिता स्वाद्वी स्मृतिस्तिष्ठति।

(७७)

पीता अत्र मुखासवाश्च कतिधा तन्नाधुना स्मर्यते
उत्फुल्लानि च चुम्बितानि वदनान्यप्यद्य न स्मर्यते।
ईषच्चुम्बितमेव ते सुवदनं चौर्येण कक्षान्तरे
अद्याप्येव तवाधरस्मृतिरियं चुम्वत्यजस्रम्मनः ॥

(७८)

त्यक्तोऽहञ्च त्वया वृतः सहचरो नूनं नवो जीवने,
जानात्येव त्वयाऽपसारितजनो लोकप्रवादाद् भयम्।
तस्मादेव तवोपहारनिकरो निस्सारितोऽयम्मया
सर्वं निस्सरतीह तत्त्वनिचयान्निस्सार्यते न स्मृतिः ॥

(७९)

उक्तं केनचिदत्र यत्सुमधुरा स्वर्गे सुधा वर्तते,
क्रान्तस्तामपि वर्तते मधुमयः कान्ताऽधरो भूतले।
सर्वासामपि माधुरी कटुतमा, निम्बायते तत्पुरः
येनाप्यत्र कदाचिदेव रसिता निश्चप्रचं ते स्मृतिः॥

(८०)

आस्ते दीर्घसमुच्चयः स्मृतिचये वैविध्यमाप्ते ततः
काश्चित्सन्ति सुकोमला हृदयव्यापारलीलापराः।
काश्चित्सन्ति हुतात्मनामपि च यैरुत्प्लुत्य युद्धप्लवे
प्राणाः साधु समर्पिता हि यजने स्वातन्त्र्यवैश्वानरे॥

(८१)

शास्त्राण्यत्र समीक्षितानि विविधा विद्याः समालोचिता
भूयोऽप्यत्र मया गुरोश्च कृपया लब्धं यशो निर्मलम्।
बाल्ये किन्तु चपेटिका गुरुवरादासादिता या मया
अद्याप्येव च माद्यतीह नितरां तस्याः स्मृतिः पावनी॥

(८२)

क्रीडानां रसमेति बाल्यवयसा सार्धं, ततो यौवने
क्रीडाया अवकाश एव सुजनैर्व्यस्तैर्न सँलभ्यते।
दर्शं दर्शमथापि नित्यमधुना क्रीडा विभिन्ना मया
बाल्यक्रीडनकञ्च देवि! 'गुलिकादण्डं' न विस्मर्यते॥

(८३)

क्रीडायास्तु तदङ्गणं सुविशदं ग्रामाद् बहिः संस्थितम्
क्रीडार्थं समुपस्थिता हि सुहृदो बालाश्च, कोलाहलः।
केचित्स्वावसराय तत्र कलहायन्ते प्रतीक्षारताः–
एतत्सर्वमहं स्मरामि मनसा पश्यन् पुरः क्रीडतः॥

(८४)

आम्रं स्वादु रसालमेव गदितम्, द्राक्षा च स्वादीयसी,
स्वादून्येव च दाडिमानि, कदली माधुर्यधुर्योच्यते।
बाल्ये किन्तु त्वया सहैव बहुधा विद्यालयस्याङ्गणे
साम्ल: कोऽपि च तिन्तिडीफलरसास्वादो न विस्मर्यते॥

(८५)

शान्ता पुष्करिणीव यत्र गहना नीराप्लुता राजते
फुल्लेन्दीवरयुग्मकं सुविहरन्नास्ते च मध्यस्थितम्।
व्याप्तं प्रेमरसामृतेन निखिलं ब्रह्माण्डमालोक्यते
यत्राजस्रमहं स्मरामि सततं नेत्रद्वयन्तेऽधुना॥

(८६)

उच्चैर्याति ततः प्रयाति परितः संयाति सञ्चारिणी
सादृश्येन बिभर्ति साधु सलिले शैवाललीलाविधिम्।
स्वैरं मज्जति नेत्रयुग्मगहने वारांनिधौ सा पुनः
पंक्तिः पक्ष्मचतुष्टयस्य नितरामद्य स्मृतौ विद्यते॥

(८७)

ऐन्द्रं दिक्षु धनुस्तनोति विशदं दृष्ट्या कदाचित् पुरस्-
तून्मेषेण सकृत्करोति हृदयं विद्धञ्च खड्गं विना।
वैदग्ध्येन ततो व्यनक्ति निखिलं स्वाकूतमत्रेङ्गितैर्
दृष्टिर्या, च पुनः स्मरामि मनसानिच्छन्नपीत्थञ्च ताम्॥

(८८)

कैश्चिच्छास्त्रधियाऽभिधैव कथिता शक्तिः परा वाङ्मये
आचार्यैश्च निरूपिता बहुविधा सा लक्षणाऽन्यैः क्वचित्।
उक्तः शिष्टजनैर्ध्वनेश्च महिमा किन्त्वत्र मे सम्मतिर्
व्यंग्यं नेत्रयुगं व्यनक्ति यदिदं तत्केन विस्मर्यते॥

(८९)

कक्षायाञ्च समान्तरेषु विविधाव्यक्तध्वनीनां क्रमः
पृष्ठस्थैर्वटुभिर्विवृत्य वदनं ह्रास्यानुकारो गुरोः ।
चापल्यञ्च तदावयोर्हि युगपत् पाठ-प्रसङ्गे पुनस्
तुष्टिं याति न मे मनोऽनुदिवसं स्मृत्वा च तास्ता क्रियाः ॥

(९०)

तीर्थं पर्यटितम्, मठं सुमथितम्, संसेविताः साधवः,
धर्मज्ञाः समुपासिताश्च विविधा विस्मारिताः साम्प्रतम् ।
बाल्ये भग्नशिवालये सुमधुरस्निग्धस्वरेणोद्गतः
सन्ध्याऽऽरात्रिकशङ्खनादसहितः स्तोत्रध्वनिः स्मर्यते ॥

(९१)

एतन्नाट्यगृहं जगत्सुविदितम्, शैलूषवृत्तिङ्गतैस्
तत्तद्भाववशीकृतैश्च निखिलैर्नित्यं नरीनृत्यते ।
बाल्ये किन्तु मयाभिनीतमसकृल्लीलाकपित्वंप्रिये !
नाट्ये दाशरथेश्च सैन्यनिकरे तन्नापि विस्मर्यते ॥

(९२)

ग्रामस्यावसतिर्मृदा विरचिता, वर्षर्तकालश्च सः,
वीथ्यः पङ्कजलाविलाश्च सततं स्कन्दज्जलन्तद् गृहम् ।
वारं वारमहो ! निशीथसमये क्लिन्नाश्च कन्थाश्च मां
रक्षन्तीमधुना स्मरामि जननीं कक्षाञ्च कक्षङ्गताम् ॥

(९३)

ग्रामस्योत्तरतः सरः ससलिलम्, नैर्ऋत्यकोणे नदी,
पूर्वस्यामपि विद्यते जलचयः साक्षात् परः पुष्करः ।
कृष्णश्यामवनं रसालविटपैः पूर्णञ्च तत् पश्चिमे
यस्य, द्वीपसमं स्मरामि हृदये स्वग्राममद्यापि तत् ॥

(९४)

हेमन्तस्य निशावसानरहिता दीर्घा च दुर्दैववद्
धूमक्लिन्नविलोचना अपि जनास्तापार्थमग्न्याश्रिताः ।
रात्राविक्षुरसोदनैश्च पयसा पक्वं सुमिष्टान्नकम्
ह्युष्णे यन्त्रनियन्त्रितेऽपि भवने तत्साधु संस्मर्यते ॥

(९५)

मृद्भाण्डस्थपयः प्रगाढमधुरं पक्वञ्च तद्गोमयैः
क्लृप्ते वह्निचये, यवान्नघटिता मृद्व्यश्च ता रोट्टिकाः ।
शाकः सर्षपपत्रराशिकलितो ह्यायुष्करन्तद् घृतम्
मध्येमोहमयीं सुभोज्यचयने तत्तन्मया स्मर्यते ॥

(९६)

स्वच्छं यत्र सुपेयमेव सलिलं कूपेषु संप्राप्यते,
वातो वातितरां प्रदोषरहितः स्वास्थ्यप्रदो निर्मलः ।
अश्वत्थैर्हि वटैश्च निम्बतरुभिर्यद् भाति तन्मामकं
ग्रामं सम्प्रति संस्मरन्निह विषं सेवे महानागरम् ॥

(९७)

आयुष्याय धवस्य मङ्गलमयोत्थानाय चाहर्निशं
संलग्नामधुना स्मरामि जननीं साध्वीं व्रतस्थाञ्च ताम् ।
तस्याः कर्कचतुर्थिकाव्रतविधावट्टालिकास्थे च मयि
वृक्षाभ्यन्तरतः शनैः सपुलकश्चन्द्रोदयः स्मर्यते ॥

(९८)

विघ्नव्यूहमचिन्त्य श्वश्रू-भवने यातस्य बन्धोः कथाम्,
प्राकारं यवगोमयैर्विरचितं दूर्वादलैः कण्टकैः ।
तस्मिन् बन्धुजनस्य भालपटले भ्रातृद्वितीयोत्सवे
टीकोट्टङ्कनमादिकञ्च निखिलं भूयः स्मरामो वयम् ॥

(९९)

उन्मुक्तस्तरुणो भिनत्ति हृदयग्रन्थिञ्च यत्रोत्सवे
स्वैरं क्लिन्नतनुः प्रयाति युवती पङ्कोपलिप्ता गृहे।
वृद्धा यत्र समाप्नुवन्ति युवभिः सार्धं नवं यौवनं
ग्रामे होलिकपर्वणो मधुमयी रीतिश्च सा स्मर्यते॥

(१००)

ग्रामीणाश्च तथैव क्षुद्रघटनाजातैर्विवादैश्च किं
ह्यद्याप्येव निजाभियोगनिरता गच्छन्ति न्यायालयान्।
मुख्याः पञ्चजनाः प्रपञ्चचतुराः 'पञ्चायता'ख्याश्च किं
न्यायं तत्र विडम्बयन्ति बहुधाऽश्वत्थस्य छाया-तले॥

(१०१)

हासश्चन्द्रकलेव पितृवदने किंस्वित् प्रिये! तिष्ठति?
कासो दुःखकरः पितामहगलादद्यापि निर्याति किम्?
मातुः सन्धिपदेषु वातजनितव्याधिश्च किं पूर्ववत्?
भद्रे! ब्रूहि ममाग्रतस्तदखिलं चिन्तातुरम्मे मनः॥

(१०२)

[नारी]

बन्धुर्मेऽसि पुरातनस्त्वमधुना तारुण्यकालात् सखे!
प्रीतिः कापि त्वया सहास्ति विमला सत्यन्ततस्तूच्यते।
सन्नद्धो भव, विप्रियं भवतु वा वृत्तं मयोक्तं प्रियम्,
कार्याकार्यविचारणाय निपुणाः श्रृण्वन्त्युदन्तं समम्॥

(१०३)

वृद्धा यान्ति दिवं पितामहसमास्तन्नास्ति चिन्ताकरः,
गन्तव्यस्त्रिदशालयो भुवि मतः श्वो वा परश्वश्च तैः।
विश्लेषेण दिवङ्गतस्तव पिता पुत्र-व्यथापीडितस्
त्वेतद्ध्येव दुनोति चित्तमसकृद् वृत्तं च मे विप्रियम्॥

(१०४)

रोगाक्रान्ततनुर्, जरा, परिकरः स्वल्पश्च, जीर्णं गृहम्,
कान्ताप्रेमवशीकृतौ च तनयौ, रिक्तान्नभाण्डाकरः।
एकैकाश्च मृता हि द्वारि पशवो, दैवप्रपन्ना कृषिः,
अम्बा तत्र यथाकथञ्चिदपि तत्सर्वंसंहा जीवति ॥

(१०५)

वार्तामिमां स करुणा कलितान्निशम्य
शोकातुरस्तदनु भूमितले पपात।
उत्थाय किञ्च विललाप पपाठ किञ्चित्
स्वार्थैकनिष्ठनिजजीवनपुस्तिकायाम् ॥

(१०६)

अहो! वृथा मे जनिरेव भद्रे!
फलं न किञ्चिन्मम जन्मनोऽद्य।
कृतम्मया नैव हितं कुलस्य
कदापि पित्रोश्च निवृत्य ग्रामे ॥

(१०७)

ममेदृशी स्वार्थपरा प्रवृत्तिः
विगर्हणीयं ननु जीवनं हि।
दिवङ्गताः पितृपदाः प्रमादान्
मुमूर्षुरेवाद्य च मातृशक्तिः ॥

(१०८)

ग्रामं परावृत्य युवास्मदीयो
हितङ्करिष्णुः समधीतविद्यः।
प्रतीक्षमाणाश्च शुभैषिणस्ते
शुभेच्छया चापि शुभाशया वा ॥

(१०९)

इत्थम्मुहुर्मुहुर्वादिनि तत्र तस्मिन्
मध्येनभस्तुहिनदीधितिराजगाम ।
तस्याः करं निजकरेण च सोऽपि गृह्णन्-
नुत्थाय किञ्च गमनाय पदं न्यधत्त ॥

(११०)

ओमित्याद्यपदं दधाति शुभतां यन्नामधेये सदा
कृष्णा-केशवयोर्बुधश्च तदयं पुत्रः प्रकाशोऽभिधः ।
पाण्डेयः स च छान्दसोऽपि विरतो जाड्यान्धकारात् सुधीर्
यातं यस्य वयोऽखिलं सुरगिरश्चर्यासपर्याविधौ ॥

(१११)

आस्ते रम्यमहापुरं सुविदितं श्रीलक्ष्मणस्थापितं
गोमत्याः सरितस्तटे सुललिते तद्विश्वविद्यालये ।
अध्येता, कविताकलासुरसिकः प्राध्यापकश्चापि यः
काव्यं स प्रणिनाय, तत् सुहृदयैः सेव्यं प्रियाभिः समम् ॥

—०—

# निर्याति नैव स्मृति

## (हिन्दी-अनुवादः)

किसी गाँव में एक गृहस्थ कृषक शान्तिपूर्वक अपने घर में रहता था। उसके बेटे वशंवद थे। पत्नी सात्त्विक तथा धर्मपरायण पतिव्रता नारी थी। दरवाजे पर कृषि में सहायक हृष्ट-पुष्ट बैलों की जोड़ी तथा दूध देने वाली कल्याणी कपिल वर्ण की गाय बँधी थी ॥ १ ॥

कृषक धन के अभाव में पीड़ित होते हुए भी, ठीक-ठाक फसल मिल जाने से और परिवारीजनों में पारस्परिक प्रेमभाव रहने से प्रसन्नतापूर्वक स्वधर्म-पालन करते हुए काल-यापन कर रहा था ॥ २ ॥

इस कृषक का सबसे बड़ा बेटा बहुत अच्छा था। विद्याबुद्धि से समन्वित उस बड़े बेटे ने विश्वविद्यालय में व्यापारिक प्रबन्धन के लिए निर्धारित पाठ्यक्रम का अध्ययन करके उपाधि प्राप्त की तथा ग्रीष्माव-काश में प्रसन्नतापूर्वक वह अपने गाँव आया ॥ ३ ॥

वहाँ उसके पड़ोस में एक सुन्दर तन्वङ्गी, सरलता की प्रतिमूर्ति और भोली आँखों वाली युवती कन्या रहती थी। कामकाज के बहाने वह (उसके घर) आती जाती रहती थी। एक बार जब वह (अपने घर की) खिड़की के पास खड़ी थी, तो बार-बार देखी गई उस युवती कन्या ने उस (युवक) का ध्यान आकृष्ट किया ॥ ४ ॥

मनोवैज्ञानिकों ने बार-बार यह बात कही है कि (कभी-कभी) किसी नवयुवक और नवयुवती की दृष्टि जब पहली बार एक-दूसरे पर पड़ती है तो उस पहली नजर में ही पारस्परिक गुणानुरागवश वे प्रेम की डोर में बँध जाते हैं (यही इस बार भी हुआ)। वह युवक और युवती जल्दी ही प्रेमा-सक्त नयनों से एक-दूसरे को देखने लगे, बार-बार उनकी भोली और गुण-

मुग्ध नजरें आपस में मिलने लगीं। कभी-कभी हँसी के साथ थोड़ी-थोड़ी इशारेबाजी, थोड़ा संलाप, फिर साथ-साथ संकेत स्थलों पर मिलना, अपने मन की बातें दोहरे अर्थोंवाले शब्दों में कहना, फिर प्रेम का प्रकाशन, आपस में कुछ 'वायदे और कसमें', सारी जिन्दगी एक साथ रहने के लिए किसी मन्दिर में शपथ लेना, नदी के किनारे और वनोपवनों में साथ-साथ घूमना—प्रेमकथाओं के रसिकों ने प्रेम के ये ही सोपान वतलाये हैं ।।५-७।।

युवक ने उस ग्रामकन्या के साथ इसी प्रकार आनन्द-विहार करते हुए दो मास बिता दिये। लेकिन गांव में अपने लिए उचित काम न पाकर खिन्न होकर (इसके बाद) जीविका की खोज में वह गाँव से बम्बई के लिए चल पड़ा ।। ८ ।।

(आज) गाँव से (इस प्रकार) जीविकारहित युवक ही (वास्तव में) नहीं जाता, गाँव की (जैसे) जवानी ही चली जाती है। आशा चली जाती है, भविष्य की दिशाएँ चली जाती हैं और (गाँव का) आकाश अन्धकार से आच्छन्न दिखाई देता है। (गाँव से) विद्या, बल और उसका भविष्य ही जैसे चला जाता है। मित्र ! बच जाते हैं गाँव में केवल खिन्नहृदय वृद्ध जन ।। ९ ।।

गाँव से शहर में अन्न, दूध-दही, शाक-सब्जी और फल सभी तो ढोकर चला जाता है। रोजी-रोटी की तलाश में गाँव से स्वच्छन्दतापूर्वक युवक चले जाते हैं। गाँव में बच रहते हैं केवल वे राजनीति के प्रपंच में कुशल लोग, जो गाँव के सौमनस्य को वैसे ही समाप्त कर रहे हैं, जैसे चन्दन के वन में रहने वाले विषधर धीरे-धीरे उस वन को खोखला करते रहते हैं ।। १० ।।

गाँव की लहलहाती फसलों वाली, उर्वरा वसुन्धरा ही तो सबका पेट भरती है, सबको अन्न देती है, कृषि ही तो हमारी सर्वस्वभूता है, लेकिन गाँव की यह भूमि बाँझ होती जा रही है और उपेक्षा के शिकार किसान के बेटे स्वयं भुखमरी के शिकार हो गये हैं ।। ११ ।।

भाई ! गाँव से धीरे-धीरे वह पुराना समस्त सौमनस्य चला गया है। उसकी जगह गरीबी, असह्य दुःख-कष्ट, लड़ाई-झगड़े, वैर-विद्वेष अवश्य आकर जम गये हैं। और कुछ भ्रष्ट, कुटिल नीतिज्ञों ने गाँव में विभाजन के बीज बो दिये हैं ।। १२ ।।

